Shri Virabhadra Sahasra Namavali 1000 names



# श्रीवीरभद्रसहस्रनामावलिः

## Sanskrit Document Information

Text title : vIrabhadrasahasranAmAvalI

File name : vIrabhadrasahasranAmAvalI.itx

Category : sahasranAmAvalI, shiva

Location : doc_shiva

Transliterated by : Sivakumar Thyagarajan shivakumar24 at gmail.com, lalitha parameswari,

Proofread by : Sivakumar Thyagarajan, Shri Pisipati Anjaneyulu, PSA Easwaran psaeaswaran at gmail.com

Latest update : January 8, 2019

Send corrections to : Sanskrit@cheerful.com



January 8, 2019

*sanskritdocuments.org*

# श्रीवीरभद्रसहस्रनामावलिः



श्रीशिवाय गुरवे
श्रीवीरभद्रसहस्रनामादि कदम्बं
श्रीवीरभद्रसहस्रनामावलिः ।
प्रारम्भः -
अस्य श्रीवीरभद्रसहस्रनामस्तोत्रमहामन्त्रस्य नारायण ऋषिः ।
अनुष्टुप् छन्दः । श्रीवीरभद्रो देवता । श्रीं बीजम् । ह्रीं शक्तिः ।
रं कीलकम् । ममोपात्त दुरितक्षयार्धं चिन्तितफलावाप्त्यर्थं अनन्तकोटि
ब्रह्माण्डस्थित देवर्षि राक्षसोरग तिर्यङ्मनुष्यादि सर्वप्राणिकोटि
क्षेमस्थैर्य विजयायुरारोग्यैश्वर्याभिवृध्यर्थं कल्पयुग
मन्वन्तराद्यनेककाल स्थितानेकजन्मजन्मान्तरार्जित पापपञ्जर द्वारा
समागत-आगामिसञ्चितप्रारब्धकर्म वशात्सम्भवित ऋणरोगदारिद्र्यजार
चोर मारीभय, अग्निभय-अतिशीत वातो ष्णादि भय क्षाम डामर
युद्धशस्त्रमन्त्रयन्त्र तन्त्रादि सर्व भय निवारणार्थं कामक्रोधलोभ
मोहमद मात्सर्य राग द्वेषादर्पासूय, अहङ्कारादि, अन्तश्शतृ
विनाशनार्थं-कालत्रय कर्म त्रयावस्थात्रय बाधित षडूर्मि
सप्तव्यसनेन्द्रिय दुर्विकार दुर्गुण दुरहङ्कार दुर्भ्रम दुरालोचन -
दुष्कर्म दुरापेक्षा दुराचारादि सर्वदुर्गुण परिहारार्थं परदारगमन
परद्रव्यापहरण, अभक्ष्या भक्षण, जीवहिंसादि कायिकदोष -
अनुचितत्व - निष्ठुर ता पैशून्यादि वाचिकदोष-जनविरुद्द कार्यापेक्ष
अनिष्ट चिन्तन धनकाङ्क्षादि मानस दोष परिहारार्थं देहाभिमान मति
मान्द्य, जडभाव निद्रा निषिद्धकर्म, आलस्य-चपलत्व -कृतघ्नता,
विश्वास घातुकता पिशुनत्व, दुराशा, मात्सर्य, अप्रलाप, अनृत,
पारुष्य, वक्रत्व, मौर्ख्य, पण्डितमानित्व, दुर्मोहादि तामसगुणदोष
परिहारार्थं, अश्रेयो, दुर्मद, दुरभिमान, वैर, निर्दाक्षिण्य,
निष्कारुण्य, दुष्काम्य, कापट्य, कोप, शोक, डम्बादि रजोगुण दोष

निर्मूल नार्थं, जन्मजन्मान्त रार्जित महापात कोपपातक सङ्कीर्ण पातक, मिश्रपातकादि समस्त पाप परिहारार्थं, देहप्राण मनो बुद्धीन्द्रि यादि दुष्ट सङ्कल्प विकल्पनादि दुष्कर्मा चरणागत दुःख नाशनार्थं, वृक्ष विष बीज विषफल विषसस्य विषपदार्थ, विषजीवजन्तुविषबुध्यादि सर्वविष विनाशनार्थं सकलचराचर वस्तुपदार्थजीवसङ्कल्प कर्मफलानुभव, शृङ्गार सुगन्धामृत भक्तिज्ञानानन्द वैभव प्राप्त्यर्थं, शुद्धसात्विकशरीर प्राणमनो बुद्धीन्द्रिय, पिपीलिकादि ब्रह्म पर्यन्त, सर्वप्रकृति स्वाभाविक विरति, विवेक, वितरण, विनय, दया, सौशील्य, मेधा प्रज्ञा धृति, स्मृति, शुद्धि, सिद्धि, सुविद्या, सुतेजस्सुशक्ति, सुलक्ष्मी, सुज्ञान, सुविचार, सुलक्षण, सुकर्म, सत्य, शौच, शान्त, शम, दम, क्षमा, तितीक्ष, समाधान, उपरति, धर्म, स्थैर्य, दान, आस्तिक, भक्तिश्रद्धा, विश्वास, प्रेम, तपो, योग, सुचित्त, सुनिश्चयादि, सकल सम्पद्गुणा वाप्त्यर्थं, निरन्तर सर्वकाल सर्वावस्थ, शिवाशिवचरणारविन्द पूजा भजन सेवासक्त निश्चल भक्तिश्रद्धाभिवृध्यनुकूल चित्त प्राप्त्यर्थं, नित्य त्रिकाल षट्काल गुरुलिङ्ग जङ्गम सेवारति षड्विध लिङ्गार्चनार्पणानुकूल सेवा परतन्त्र सद्गुणयुक्त, सती सुत क्षेत्र विद्या बल यव्वन पूजोपकरण भोगोपकरण सर्व पदार्थालनु कूलता प्राप्त्यर्थम् । श्रीमदनन्तकोटि ब्रह्माण्डस्थितानन्तकोटि महापुण्यतीर्थ क्षेत्रपर्वत पट्टणारण्य ग्रामगृह देहनिवास, असं ख्याककोटि शिवलिङ्ग पूजाभोगनिमित्त सेवानु कूल पिपीलिकादि ब्रह्म पर्यन्तस्थित सर्वप्राणिकोटि संरक्षणार्थं भक्त संरक्षणार्थ मङ्गी कृतानन्दकल्याण गुणयुत, उपमानरहित, अपरिमित सौन्दर्यदिव्यमङ्गल विग्रहस्वरूप श्री भद्रकाली सहित श्रीवीरभद्रेश्वर प्रत्यक्ष लीलावतारचरणारविन्द यथार्थ दर्शनार्थं श्रीवीरभद्रस्वामि प्रीत्यर्थं सकलविधफल पुरुषार्थ सिद्ध्यर्थं श्रीवीरभद्रसहस्रनाममन्त्रजपं करिष्ये ।

अथ श्रीवीरभद्रसहस्रनामावलिः ।

ॐ शम्भवे नमः ।

ॐ शिवाय नमः ।

ॐ महादेवाय नमः ।

ॐ शितिकण्ठाय नमः ।
ॐ वृषध्वजाय नमः ।
ॐ दक्षाध्वरहराय नमः ।
ॐ दक्षाय नमः ।
ॐ क्रूरदानवभञ्जनाय नमः ।
ॐ कपर्दिने नमः ।
ॐ कालविध्वंसिने नमः । १०
ॐ कपालिने नमः ।
ॐ करुणार्णवाय नमः ।
ॐ शरणागतरक्षैकनिपुणाय नमः ।
ॐ नीललोहिताय नमः ।
ॐ निरीशाय नमः ।
ॐ निर्भयाय नमः ।
ॐ नित्याय नमः ।
ॐ नित्यतृप्ताय नमः ।
ॐ निरामयाय नमः ।
ॐ गम्भीरनिनदाय नमः । २०
ॐ भीमाय नमः ।
ॐ भयङ्करस्वरूपधृते नमः ।
ॐ पुरन्दरादि गीर्वाणवन्द्यमानपदाम्बुजाय नमः ।
ॐ संसारवैद्याय नमः ।
ॐ सर्वज्ञाय नमः ।
ॐ सर्वभेषजभेषजाय नमः ।
ॐ मृत्युञ्जयाय नमः ।
ॐ कृत्तिवाससे नमः ।
ॐ त्र्यम्बकाय नमः ।
ॐ त्रिपुरान्तकाय नमः । ३०
ॐ वृन्दारवृन्दमन्दाराय नमः ।
ॐ मन्दाराचलमण्डनाय नमः ।
ॐ कुन्देन्दुहारनीहारहारगौरसमप्रभाय नमः ।
ॐ राजराजसखाय नमः ।
ॐ श्रीमते नमः ।

ॐ राजीवायतलोचनाय नमः ।
ॐ महानटाय नमः ।
ॐ महाकालाय नमः ।
ॐ महासत्याय नमः ।
ॐ महेश्वराय नमः । ४०
ॐ उत्पत्तिस्थितिसंहारकारणाय नमः ।
ॐ आनन्दकर्मकाय नमः ।
ॐ साराय नमः ।
ॐ शूराय नमः ।
ॐ महाधीराय नमः ।
ॐ वारिजासनपूजिताय नमः ।
ॐ वीरसिंहासनारूढाय नमः ।
ॐ वीरमौलिशिखामणये नमः ।
ॐ वीरप्रियाय नमः ।
ॐ वीररसाय नमः । ५०
ॐ वीरभाषणतत्पराय नमः ।
ॐ वीरसङ्ग्रामविजयिने नमः ।
ॐ वीराराधनतोषिताय नमः ।
ॐ वीरव्रताय नमः ।
ॐ विराड्रूपाय नमः ।
ॐ विश्वचैतन्यरक्षकाय नमः ।
ॐ वीरखड्गाय नमः ।
ॐ भारशराय नमः ।
ॐ मेरुकोदण्डमण्डिताय नमः ।
ॐ वीरोत्तमाङ्गाय नमः । ६०
ॐ शृङ्गारफलकाय नमः ।
ॐ विविधायुधाय नमः ।
ॐ नानासनाय नमः ।
ॐ नतारातिमण्डलाय नमः ।
ॐ नागभूषणाय नमः ।
ॐ नारदस्तुतिसन्तुष्टाय नमः ।
ॐ नागलोकपितामहाय नमः ।

ॐ सुदर्शनाय नमः ।
ॐ सुधाकायाय नमः ।
ॐ सुरारातिविमर्दनाय नमः । ७०
ॐ असहायाय नमः ।
ॐ परस्मै नमः ।
ॐ सर्वसहायाय नमः ।
ॐ साम्प्रदायकाय नमः ।
ॐ कामदाय नमः ।
ॐ विषभुजे नमः ।
ॐ योगिने नमः ।
ॐ भोगीन्द्राञ्चितकुण्डलाय नमः ।
ॐ उपाध्यायाय नमः ।
ॐ दक्षरिपवे नमः । (दक्षवटवे) ८०
ॐ कैवल्यनिधये नमः ।
ॐ अच्युताय नमः ।
ॐ सत्त्वाय नमः ।
ॐ रजसे नमः ।
ॐ तमसे नमः ।
ॐ स्थूलाय नमः ।
ॐ सूक्ष्माय नमः ।
ॐ अन्तर्बहिरव्ययाय नमः ।
ॐ भुवे नमः ।
ॐ अद्भ्यः नमः । ९०
ॐ ज्वलनाय नमः ।
ॐ वायवे नमः । (वायुदेवाय)
ॐ गगनाय नमः ।
ॐ त्रिजगद्गुरवे नमः ।
ॐ निराधाराय नमः ।
ॐ निरालम्बाय नमः ।
ॐ सर्वाधाराय नमः ।
ॐ सदाशिवाय नमः ।
ॐ भास्वराय नमः ।

ॐ भगवते नमः । १००
ॐ भालनेत्राय नमः ।
ॐ भावजसंहराय नमः ।
ॐ व्यालबद्धजटाजूटाय नमः ।
ॐ बालचन्द्रशिखामणये नमः ।
ॐ अक्षय्याय नमः । (अक्षयैकाक्षराय)
ॐ एकाक्षराय नमः ।
ॐ दुष्टशिक्षकाय नमः ।
ॐ शिष्टरक्षिताय नमः । (शिष्टरक्षकाय)
ॐ दक्षपक्षेषुबाहुल्यवनलीलागजाय नमः । (पक्ष)
ॐ ऋजवे नमः । ११०
ॐ यज्ञाङ्गाय नमः ।
ॐ यज्ञभुजे नमः ।
ॐ यज्ञाय नमः ।
ॐ यज्ञेशाय नमः ।
ॐ यजनेश्वराय नमः ।
ॐ महायज्ञधराय नमः ।
ॐ दक्षसम्पूर्णाहूतिकौशलाय नमः ।
ॐ मायामयाय नमः ।
ॐ महाकायाय नमः ।
ॐ मायातीताय नमः । १२०
ॐ मनोहराय नमः ।
ॐ मारदर्पहराय नमः ।
ॐ मञ्जवे नमः ।
ॐ महीसुतदिनप्रियाय नमः ।
ॐ सौम्याय नमः । (काम्यायः)
ॐ समाय नमः ।
ॐ असमाय नमः । (अनघाय)
ॐ अनन्ताय नमः ।
ॐ समानरहिताय नमः ।
ॐ हराय नमः । १३०
ॐ सोमाय नमः ।

ॐ अनेककलाधाम्ने नमः ।
ॐ व्योमकेशाय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ गुरवे नमः ।
ॐ सुरगुरवे नमः ।
ॐ गूढाय नमः ।
ॐ गुहाराधनतोषिताय नमः ।
ॐ गुरुमन्त्राक्षराय नमः ।
ॐ गुरवे नमः । १४०
ॐ पराय नमः ।
ॐ परमकारणाय नमः ।
ॐ कलये नमः ।
ॐ कलाढ्याय नमः ।
ॐ नीतिज्ञाय नमः ।
ॐ करालासुरसेविताय नमः ।
ॐ कमनीयरविच्छायाय नमः । (कमनीयरविच्छायानन्दनाय)
ॐ नन्दनानन्दवर्धनाय नमः । नमः । (नन्दवर्धनाय)
ॐ स्वभक्तपक्षाय नमः ।
ॐ प्रबलाय नमः । १५०
ॐ स्वभक्तबलवर्धनाय नमः ।
ॐ स्वभक्तप्रतिवादिने नमः ।
ॐ इन्द्रमुखचन्द्रवितुन्तुदाय नमः ।
ॐ शेषभूषाय नमः ।
ॐ विशेषज्ञाय नमः ।
ॐ तोषिताय नमः ।
ॐ सुमनसे नमः ।
ॐ सुधिये नमः ।
ॐ दूषकाभिजनोद्धूतधूमकेतवे नमः ।
ॐ सनातनाय नमः । १६०
ॐ दूरीकृताघपटलाय नमः ।
ॐ चोरीकृताय नमः । (ऊरीकृतसुखव्रजाय)
ॐ सुखप्रजाय नमः ।

ॐ पूरीकृतेषुकोदण्डाय नमः ।
ॐ निर्वैरीकृतसङ्गराय नमः ।
ॐ ब्रह्मविदे नमः ।
ॐ ब्राह्मणाय नमः ।
ॐ ब्रह्मणे नमः ।
ॐ ब्रह्मचारिणे नमः ।
ॐ जगत्पतये नमः । १७०
ॐ ब्रह्मेश्वराय नमः ।
ॐ ब्रह्ममयाय नमः ।
ॐ परब्रह्मात्मकाय नमः ।
ॐ प्रभवे नमः ।
ॐ नादप्रियाय नमः ।
ॐ नादमयाय नमः ।
ॐ नादबिन्दवे नमः ।
ॐ नगेश्वराय नमः ।
ॐ आदिमध्यान्तरहिताय नमः ।
ॐ वेदाय नमः । १८०
ॐ वेदविदां वराय नमः ।
ॐ इष्टाय नमः ।
ॐ विशिष्टाय नमः ।
ॐ तुष्टघ्नाय नमः ।
ॐ पुष्टिदाय नमः ।
ॐ पुष्टिवर्धनाय नमः ।
ॐ कष्टदारिद्र्यनिर्नाशाय नमः ।
ॐ दुष्टव्याधिहराय नमः ।
ॐ हराय नमः ।
ॐ पद्मासनाय नमः । १९०
ॐ पद्मकराय नमः ।
ॐ नवपद्मासनार्चिताय नमः ।
ॐ नीलाम्बुजदलश्यामाय नमः ।
ॐ निर्मलाय नमः ।
ॐ भक्तवत्सलाय नमः ।

ॐ नीलजीमूतसङ्काशाय नमः ।
ॐ कालकन्धरबन्धुराय नमः ।
ॐ जपाकुसुमसन्तुष्टाय नमः ।
ॐ जपहोमार्चनप्रियाय नमः । (जनप्रियाय, होमप्रियाय, अर्चनाप्रियाय)
ॐ जगदाद्ये नमः । २००
ॐ अनादीशाय नमः । (आनन्देशाय)
ॐ अजगवन्धरकौतुकाय नमः ।
ॐ पुरन्दरस्तुतानन्दाय नमः ।
ॐ पुलिन्दाय नमः ।
ॐ पुण्यपञ्जराय नमः ।
ॐ पौलस्त्यचलितोल्लोलपर्वताय नमः ।
ॐ प्रमदाकराय नमः ।
ॐ करणाय नमः ।
ॐ कारणाय नमः ।
ॐ कर्मकरणीयाग्रण्यै नमः । (कर्त्रे, करणियाय, अग्रण्यै) २१०
ॐ दृढाय नमः ।
ॐ करिदैत्येन्द्रवसनाय नमः ।
ॐ करुणापूरवारिधये नमः ।
ॐ कोलाहलप्रियाय नमः । (कोलाहलाय)
ॐ प्रीताय नमः । (प्रेयसे)
ॐ शूलिने नमः ।
ॐ व्यालकपालभृते नमः ।
ॐ कालकूटगलाय नमः ।
ॐ क्रीडालीलाकृतजगत्त्रयाय नमः ।
ॐ दिगम्बराय नमः । २२०
ॐ दिनेशेशाय नमः ।
ॐ धीमते नमः ।
ॐ धीराय नमः ।
ॐ धुरन्धराय नमः ।
ॐ दिक्कालाद्यनवच्छिन्नाय नमः ।
ॐ धूर्जटये नमः ।
ॐ धूतदुर्गतये नमः । (धूतदुर्वृत्तये)

ॐ कमनीयाय नमः ।
ॐ करालास्याय नमः ।
ॐ कलिकल्मषसूदनाय नमः । २३०
ॐ करवीरारुणाम्भोजकल्हारकुसुमार्पिताय नमः ।
ॐ खराय नमः ।
ॐ मण्डितदोर्दण्डाय नमः ।
ॐ खरूपाय नमः ।
ॐ कालभञ्जनाय नमः ।
ॐ खरांशुमण्डलमुखाय नमः ।
ॐ खण्डितारातिमण्डलाय नमः ।
ॐ गणेशगणिताय नमः ।
ॐ अगण्याय नमः ।
ॐ पुण्यराशये नमः । २४०
ॐ सुखोदयाय नमः ।
ॐ गणाधिपकुमारादिगणकैरवबान्धवाय नमः ।
ॐ घनघोषबृहन्नादघनीकृतसुनूपुराय नमः ।
ॐ घनचर्चितसिन्दूराय नमः । (घनचर्चितसिन्धुराय)
ॐ घण्टाभीषणभैरवाय नमः ।
ॐ परापराय नमः । (चराचराय)
ॐ बलाय नमः । (अचलाय)
ॐ अनन्ताय नमः ।
ॐ चतुराय नमः ।
ॐ चक्रबन्धकाय नमः । २५०
ॐ चतुर्मुखमुखाम्भोजचतुरस्तुतितोषणाय नमः ।
ॐ छलवादिने नमः ।
ॐ छलाय नमः ।
ॐ शान्ताय नमः ।
ॐ छान्दसाय नमः ।
ॐ छान्दसप्रियाय नमः ।
ॐ छिन्नच्छलादिदुर्वादच्छिन्नषड्तन्त्रतान्त्रिकाय नमः ।
(घनच्छलादिदुर्वादभिन्नषड्तन्त्रतान्त्रिकाय)
ॐ जडीकृतमहावज्राय नमः ।

ॐ जम्भारातये नमः ।
ॐ नतोन्नताय नमः । २६०
ॐ जगदाधाराय नमः । (जगदाधारभुवे)
ॐ भूतेशाय नमः ।
ॐ जगदन्ताय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ झर्झरध्वनिसम्युक्तझङ्काररवभूषणाय नमः ।
ॐ झटिने नमः ।
ॐ विपक्षवृक्षौघझञ्झामारुतसन्निभाय नमः ।
ॐ प्रवर्णाञ्चितपत्राङ्काय नमः ।
ॐ प्रवर्णाद्यक्षरव्रजाय नमः ।
ॐ ट-वर्णबिन्दुसम्युक्ताय नमः । २७०
ॐ टङ्कारहृतदिग्गजाय नमः ।
ॐ ठ-वर्णपूरद्विदळाय नमः ।
ॐ ठ-वर्णाग्रदळाक्षराय नमः ।
ॐ ठ-वर्णयुतसद्यन्त्राय नमः ।
ॐ ठज-जाक्षरपूरकाय नमः ।
ॐ डमरुध्वनिसम्रक्ताय नमः । (डमरुध्वनिसुरक्ताय)
ॐ डम्बरानन्दताण्डवाय नमः ।
ॐ डण्डण्ढघोषप्रमोदाडम्बराय नमः ।
ॐ गणताण्डवाय नमः ।
ॐ ढक्कापटहसुप्रीताय नमः । २८०
ॐ ढक्कारववशानुगाय नमः ।
ॐ ढक्कादिताळसन्तुष्टाय नमः ।
ॐ तोडिबद्धस्तुतिप्रियाय नमः ।
ॐ तपस्विरूपाय नमः ।
ॐ तपनाय नमः । (तापसाय)
ॐ तप्तकाञ्चनसन्निभाय नमः ।
ॐ तपस्विवदनाम्भोजकारुण्यतरणिद्युतये नमः ।
ॐ ढगादिवादसौहार्दस्थिताय नमः ।
ॐ सम्यमिनां वराय नमः ।
ॐ स्थाणवे नमः । २९०

ॐ तण्डुनुतिप्रीताय नमः ।
ॐ स्थितये नमः ।
ॐ स्थावराय नमः ।
ॐ जङ्गमाय नमः ।
ॐ दरहासाननाम्भोजदन्तहीरावळिद्युतये नमः ।
ॐ दर्वीकराङ्गतभुजाय नमः ।
ॐ दुर्वाराय नमः ।
ॐ दुःखदुर्गघ्ने नमः । (दुःखदुर्गहर्त्रे)
ॐ धनाधिपसख्ये नमः ।
ॐ धीराय नमः । (धैर्याय) (धर्माय) ३००
ॐ धर्माधर्मपरायणाय नमः । -
ॐ धर्मध्वजाय नमः ।
ॐ दानशौण्डाय नमः । (दानभाण्डाय)
ॐ धर्मकर्मफलप्रदाय नमः ।
ॐ पशुपाशहाराय नमः । (तमोऽपहाराय)
ॐ शर्वाय नमः ।
ॐ परमात्मने नमः ।
ॐ सदाशिवाय नमः ।
ॐ परापराय नमः ।
ॐ परशुधृते नमः । ३१०
ॐ पवित्राय नमः ।
ॐ सर्वपावनाय नमः ।
ॐ फल्गुनस्तुतिसन्तुष्टाय नमः ।
ॐ फल्गुनाग्रजवत्सलाय नमः ।
ॐ फल्गुनार्जितसङ्ग्रामफलपाशुपतप्रदाय नमः ।
ॐ बलाय नमः ।
ॐ बहुविलासाङ्गाय नमः ।
ॐ बहुलीलाधराय नमः ।
ॐ बहवे नमः ।
ॐ बर्हिर्मुखाय नमः । ३२०
ॐ सुराराध्याय नमः ।
ॐ बलिबन्धनबान्धवाय नमः ।

ॐ भयङ्कराय नमः ।
ॐ भवहराय नमः ।
ॐ भर्गाय नमः ।
ॐ भयहराय नमः ।
ॐ भवाय नमः ।
ॐ भालानलाय नमः ।
ॐ बहुभुजाय नमः ।
ॐ भास्वते नमः । ३३०
ॐ सद्भक्तवत्सलाय नमः ।
ॐ मन्त्राय नमः ।
ॐ मन्त्रगणाय नमः ।
ॐ मन्त्रिणे नमः ।
ॐ मन्त्राराधनतोषिताय नमः ।
ॐ मन्त्रयज्ञाय नमः । (मन्त्रविज्ञाय नमः ।
ॐ मन्त्रवादिने नमः ।
ॐ मन्त्रबीजाय नमः ।
ॐ महन्महसे नमः । (महन्मानसे)
ॐ यन्त्राय नमः । ३४०
ॐ यन्त्रमयाय नमः ।
ॐ यन्त्रिणे नमः ।
ॐ यन्त्रज्ञाय नमः ।
ॐ यन्त्रवत्सलाय नमः ।
ॐ यन्त्रपालाय नमः ।
ॐ यन्त्रहराय नमः ।
ॐ त्रिजगद्यन्त्रवाहकाय नमः ।
ॐ रजताद्रिसदावासाय नमः ।
ॐ रवीन्दुशिखिलोचनाय नमः ।
ॐ रतिश्रान्ताय नमः । ३५०
ॐ जितश्रान्ताय नमः ।
ॐ रजनीकरशेखराय नमः ।
ॐ ललिताय नमः ।
ॐ लास्यसन्तुष्टाय नमः ।

ॐ लब्धोग्राय नमः ।
ॐ लघुसाहसाय नमः ।
ॐ लक्ष्मीनिजकराय नमः ।
ॐ लक्ष्यलक्षणज्ञाय नमः ।
ॐ लसन्मतये नमः ।
ॐ वरिष्ठाय नमः । ३६०
ॐ वरदाय नमः ।
ॐ वन्द्याय नमः ।
ॐ वरदानपराय नमः । नमः । (वरप्रदाय)
ॐ वशिने नमः ।
ॐ वैश्वानराञ्चितभुजाय नमः ।
ॐ वरेण्याय नमः ।
ॐ विश्वतोमुखाय नमः ।
ॐ शरणार्तिहराय नमः ।
ॐ शान्ताय नमः ।
ॐ शङ्कराय नमः । ३७०
ॐ शशिशेखराय नमः ।
ॐ शरभाय नमः ।
ॐ शम्बरारातये नमः ।
ॐ भस्मोद्धूळितविग्रहाय नमः ।
ॐ षड्त्रिंशत्तत्त्वविद्रूपाय नमः ।
ॐ षण्मुखस्तुतितोषणाय नमः ।
ॐ षडक्षराय नमः ।
ॐ शक्तियुताय नमः ।
ॐ षद्पदाद्यर्थकोविदाय नमः । (षद्पदार्धार्थकोविदाय)
ॐ सर्वज्ञाय नमः । ३८०
ॐ सर्वसर्वेशाय नमः ।
ॐ सर्वदाऽऽनन्दकारकाय नमः ।
ॐ सर्वविदे नमः ।
ॐ सर्वकृते नमः ।
ॐ सर्वस्मै नमः ।
ॐ सर्वदाय नमः ।

ॐ सर्वतोमुखाय नमः ।
ॐ हराय नमः ।
ॐ परमकल्याणाय नमः ।
ॐ हरिचर्मधराय नमः । ३९०
ॐ परस्मैय नमः ।
ॐ हरिणार्धकराय नमः ।
ॐ हंसाय नमः ।
ॐ हरिकोटिसमप्रभाय नमः ।
ॐ देवदेवाय नमः ।
ॐ जगन्नाथाय नमः ।
ॐ देवेशाय नमः ।
ॐ देववल्लभाय नमः ।
ॐ देवमौलिशिखारत्नाय नमः ।
ॐ देवासुरसुतोषिताय नमः । (देवासुरनुताय) (उन्नताय) ४००
ॐ सुरूपाय नमः ।
ॐ सुव्रताय नमः ।
ॐ शुद्धाय नमः ।
ॐ सुकर्मणे नमः । (सुकर्मिणे)
ॐ सुस्थिराय नमः ।
ॐ सुधिये नमः ।
ॐ सुरोत्तमाय नमः ।
ॐ सुफलदाय नमः ।
ॐ सुरचिन्तामणये नमः ।
ॐ शुभाय नमः । ४१०
ॐ कुशलिने नमः ।
ॐ विक्रमाय नमः ।
ॐ तर्क्याय नमः ।
ॐ कुण्डलीकृतकुण्डलिने नमः ।
ॐ खण्डेन्दुकारकाय नमः । (खण्डेन्दुकोरकाय)
ॐ जटाजूटाय नमः ।
ॐ कालानलद्युतये नमः ।
ॐ व्याघ्रचर्माम्बरधराय नमः ।

ॐ व्याघ्रोग्रबहुसाहसाय नमः ।
ॐ व्याळोपवीतिने नमः । (व्यालोपवीतविलसते) ४२०
ॐ विलसच्छोणतामरसाम्बकाय नमः ।
ॐ द्युमणये नमः ।
ॐ तरणये नमः ।
ॐ वायवे नमः ।
ॐ सलिलाय नमः ।
ॐ व्योम्ने नमः ।
ॐ पावकाय नमः ।
ॐ सुधाकराय नमः ।
ॐ यज्ञपतये नमः ।
ॐ अष्टमूर्तये नमः । ४३०
ॐ कृपानिधये नमः ।
ॐ चिद्रूपाय नमः ।
ॐ चिद्घनानन्दकन्दाय नमः ।
ॐ चिन्मयाय नमः ।
ॐ निष्कलाय नमः ।
ॐ निर्द्वन्द्वाय नमः ।
ॐ निष्प्रभाय नमः ।
ॐ नित्याय नमः ।
ॐ निर्गुणाय नमः ।
ॐ निर्गतामयाय नमः । ४४०
ॐ व्योमकेशाय नमः ।
ॐ विरूपाक्षाय नमः ।
ॐ वामदेवाय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ नामरूपाय नमः ।
ॐ शमधुराय नमः ।
ॐ कामचारिणे नमः ।(कामजारये)
ॐ कलाधराय नमः ।
ॐ जाम्बूनदप्रभाय नमः ।
ॐ जाग्रज्जन्मादिरहिताय नमः । (जाग्रते, जन्मादिरहिताय) ४५०

ॐ उज्ज्वलाय नमः ।
ॐ सर्वजन्तूनां जनकाय नमः । (सर्वजन्तुजनकाय)
ॐ जन्मदुःखापनोदनाय नमः ।
ॐ पिनाकपाणये नमः ।
ॐ अक्रोधाय नमः ।
ॐ पिङ्गलायतलोचनाय नमः ।
ॐ परमात्मने नमः ।
ॐ पशुपतये नमः ।
ॐ पावनाय नमः । (पापनाशकाय)
ॐ प्रमथाधिपाय नमः । ४६०
ॐ प्रणवाय नमः । (प्रणुताय)
ॐ कामदाय नमः ।
ॐ कान्ताय नमः ।
ॐ श्रीप्रदाय नमः । (श्रीदेवीदिव्यलोचनाय)
ॐ दिव्यलोचनाय नमः ।
ॐ प्रणतार्तिहराय नमः ।
ॐ प्राणाय नमः ।
ॐ परञ्ज्योतिषे नमः ।
ॐ परात्पराय नमः ।
ॐ तुष्टाय नमः । ४७०
ॐ तुहिनशैलाधिवासाय नमः ।
ॐ स्तोतृवरप्रदाय नमः । (स्तोत्रवरप्रियाय)
ॐ इष्टकाम्यार्थफलदाय नमः ।
ॐ सृष्टिकर्त्रे नमः ।
ॐ मरुत्पतये नमः ।
ॐ भृग्वत्रिकण्वजाबालिहृत्पद्माहिमदीधितये नमः ।
ॐ (भार्गवाङ्गीरसात्रेयनेत्रकुमुदतुहिनदीधितये)
ॐ क्रतुध्वंसिने नमः ।
ॐ क्रतुमुखाय नमः ।
ॐ क्रतुकोटिफलप्रदाय नमः । ४८०
ॐ क्रतवे नमः ।
ॐ क्रतुमयाय नमः ।

ॐ क्रूरदर्पघ्नाय नमः ।
ॐ विक्रमाय नमः ।
ॐ विभवे नमः ।
ॐ दधीचिहृदयानन्दाय नमः ।
ॐ दधीच्यादिसुपालकाय नमः । (दधीचिच्छविपालकाय)
ॐ दधीचिवाञ्छितसखाय नमः ।
ॐ दधीचिवरदाय नमः ।
ॐ अनघाय नमः । ४९०
ॐ सत्पथक्रमविन्यासाय नमः ।
ॐ जटामण्डलमण्डिताय नमः ।
ॐ साक्षित्रयीमयाय नमः । (साक्षत्रयीमयाय)
ॐ चारुकलाधरकपर्दभृते नमः ।
ॐ मार्कण्डेयमुनिप्रीताय नमः । (मार्कण्डेयमुनिप्रियाय)
ॐ मृडाय नमः ।
ॐ जितपरेतराजे नमः ।
ॐ महीरथाय नमः ।
ॐ वेदहयाय नमः ।
ॐ कमलासनसारथये नमः । ५००
ॐ कौण्डिन्यवत्सवात्सल्याय नमः ।
ॐ काश्यपोदयदर्पणाय नमः ।
ॐ कण्वकौशिकदुर्वासाहृद्गुहान्तर्निधये नमः ।
ॐ निजाय नमः ।
ॐ कपिलाराधनप्रीताय नमः ।
ॐ कर्पूरधवलद्युतये नमः ।
ॐ करुणावरुणाय नमः ।
ॐ काळीनयनोत्सवसङ्गराय नमः ।
ॐ घृणैकनिलयाय नमः ।
ॐ गूढतनवे नमः । ५१०
ॐ मुरहरप्रियाय नमः । (मयहरिप्रियाय)
ॐ गणाधिपाय नमः ।
ॐ गुणनिधये नमः ।
ॐ गम्भीराञ्चितवाक्पतये नमः ।

ॐ विघ्ननाशाय नमः ।
ॐ विशालाक्षाय नमः ।
ॐ विघ्नराजाय नमः ।
ॐ विशेषविदे नमः ।
ॐ सप्तयज्ञयजाय नमः ।
ॐ सप्तजिह्वाय नमः । (सप्तजिह्वरसनासंहाराय) ५२०
ॐ जिह्वातिसंवराय नमः ।
ॐ अस्थिमालाऽऽविलशिरसे नमः ।
ॐ विस्तारितजगद्भुजाय नमः ।
ॐ न्यस्ताखिलस्रजस्तोकविभवाय नमः । (व्यस्ताखिलस्रजे अस्तोकविभवाय)
ॐ प्रभवे नमः ।
ॐ ईश्वराय नमः ।
ॐ भूतेशाय नमः ।
ॐ भुवनाधाराय नमः ।
ॐ भूतिदाय नमः ।
ॐ भूतिभूषणाय नमः । ५३०
ॐ भूतात्मकात्मकाय नमः । (भूस्थितजीवात्मकाय)
ॐ भूर्भुवादि क्षेमकराय नमः ।
ॐ शिवाय नमः ।
ॐ अणोरणीयसे नमः ।
ॐ महतो महीयसे नमः ।
ॐ वागगोचराय नमः ।
ॐ अनेकवेदवेदान्ततत्त्वबीजाय नमः ।
ॐ तपोनिधये नमः ।
ॐ महावनविलासाय नमः ।
ॐ अतिपुण्यनाम्ने नमः । ५४०
ॐ सदाशुचये नमः ।
ॐ महिषासुरमर्दिन्याः नयनोत्सवसङ्कराय नमः ।
ॐ शितिकण्ठाय नमः ।
ॐ शिलादादि महर्षिनतिभाजनाय नमः । (शिलादप्रसन्नहसन्नतभाजनाय)
ॐ गिरीशाय नमः ।
ॐ गीष्पतये नमः ।

ॐ गीतवाद्यनृत्यस्तुतिप्रियाय नमः ।   नमः । (स्तुतिगीतवाद्यवृत्तप्रियाय)
ॐ सुकृतिभिः अङ्गीकृताय नमः ।  (अङ्गीकृतसुकृतिने)
ॐ शृङ्गाररसजन्मभुवे नमः ।
ॐ भृङ्गीताण्डवसन्तुष्ठाय नमः ।  ५५०
ॐ मङ्गलाय नमः ।
ॐ मङ्गलप्रदाय नमः ।
ॐ मुक्तेन्द्रनीलताटङ्काय नमः ।
ॐ मुक्ताहारविभूषिताय नमः । (ईश्वराय)
ॐ सक्तसज्जनसद्भावाय नमः ।
ॐ भुक्तिमुक्तिफलप्रदाय नमः ।
ॐ सुरूपाय नमः ।
ॐ सुन्दराय नमः ।
ॐ शुक्लाय नमः ।
ॐ धर्माय नमः ।  ५६०
ॐ सुकृतविग्रहाय नमः ।
ॐ जितामरद्रुमाय नमः ।
ॐ सर्वदेवराजाय नमः ।
ॐ असमेक्षणाय नमः ।
ॐ दिवस्पतिसहस्राक्षवीक्षणावळितोषकाय नमः । (वीक्षणस्तुतितोषणाय)
ॐ दिव्यनामामृतरसाय नमः ।
ॐ दिवाकरपतये नमः । (दिवौकःपतये)
ॐ प्रभवे नमः ।
ॐ पावकप्राणसन्मित्राय नमः ।
ॐ प्रख्यातोर्ध्वज्वलन्महसे नमः । (प्रख्याताय, ऊर्ध्वज्वलन्महसे)  ५७०
ॐ प्रकृष्टभानवे नमः ।
ॐ पुरुषाय नमः ।
ॐ पुरोडाशभुजे ईश्वराय नमः ।
ॐ समवर्तिने नमः ।
ॐ पितृपतये नमः ।
ॐ धर्मराड्दमनाय नमः ।   (धर्मराजाय, दमनाय)
ॐ यमिने नमः ।
ॐ पितृकाननसन्तुष्टाय नमः ।

ॐ भूतनायकनायकाय नमः ।
ॐ नयान्विताय नमः । (नतानुयायिने) ५८०
ॐ सुरपतये नमः ।
ॐ नानापुण्यजनाश्रयाय नमः ।
ॐ नैर्ऋत्यादि महाराक्षसेन्द्रस्तुतयशोऽम्बुधये नमः ।
ॐ प्रचेतसे नमः ।
ॐ जीवनपतये नमः ।
ॐ धृतपाशाय नमः । (जितपाशाय)
ॐ दिगीश्वराय नमः ।
ॐ धीरोदारगुणाम्भोधिकौस्तुभाय नमः ।
ॐ भुवनेश्वराय नमः ।
ॐ सदानुभोगसम्पूर्णसौहार्दाय नमः । (सदानुभोगसम्पूर्णसौहृदाय) ५९०
ॐ सुमनोज्ज्वलाय नमः ।
ॐ सदागतये नमः ।
ॐ साररसाय नमः ।
ॐ सजगत्प्राणजीवनाय नमः ।
ॐ राजराजाय नमः ।
ॐ किन्नरेशाय नमः ।
ॐ कैलासस्थाय नमः ।
ॐ धनप्रदाय नमः ।
ॐ यक्षेश्वरसखाय नमः ।
ॐ कुक्षिनिक्षिप्तानेकविस्मयाय नमः । ६००
ॐ ईशानाय नमः । (ईश्वराय)
ॐ सर्वविद्यानामीश्वराय नमः । (सर्वविद्येशाय)
ॐ वृषलाञ्छनाय नमः ।
ॐ इन्द्रादिदेवविलसन्मौलिरम्यपदाम्बुजाय नमः ।
ॐ विश्वकर्माऽऽश्रयाय नमः ।
ॐ विश्वतोबाहवे नमः ।
ॐ विश्वतोमुखाय नमः ।
ॐ विश्वतः प्रमदाय नमः ।
ॐ विश्वनेत्राय नमः ।
ॐ विश्वेश्वराय नमः । ६१०

ॐ विभवे नमः ।
ॐ सिद्धान्ताय नमः ।
ॐ सिद्धसङ्कल्पाय नमः ।
ॐ सिद्धगन्धर्वसेविताय नमः ।
ॐ सिद्धिदाय नमः ।
ॐ शुद्धहृदयाय नमः ।
ॐ सद्योजाताननाय नमः ।
ॐ शिवाय नमः ।
ॐ श्रीमयाय नमः ।
ॐ श्रीकटाक्षाङ्गाय नमः । ६२०
ॐ श्रीनाम्ने नमः ।
ॐ श्रीगणेश्वराय नमः ।
ॐ श्रीदाय नमः ।
ॐ श्रीवामदेवास्याय नमः ।
ॐ श्रीकण्ठाय नमः । (श्रियै)
ॐ श्रीप्रियङ्कराय नमः ।
ॐ घोराघध्वान्तमार्ताण्डाय नमः ।
ॐ घोरेतरफलप्रदाय नमः ।
ॐ घोरघोरमहायन्त्रराजाय नमः ।
ॐ घोरमुखाम्बुजाय नमः । नमः । (घोरमुखाम्बुजाताय) ६३०
ॐ सुषिरसुप्रीततत्त्वाद्यागमजन्मभुवे नमः ।
ॐ तत्त्वमस्यादि वाक्यार्थाय नमः ।
ॐ तत्पूर्वमुखमण्डिताय नमः ।
ॐ आशापाशविनिर्मुक्ताय नमः ।
ॐ शेषभूषणभूषिताय नमः । (शुभभूषणभूषिताय)
ॐ दोषाकरलसन्मौलये नमः ।
ॐ ईशानमुखनिर्मलाय नमः ।
ॐ पञ्चवक्त्राय नमः ।
ॐ दशभुजाय नमः ।
ॐ पञ्चाशद्वर्णनायकाय नमः । ६४०
ॐ पञ्चाक्षरयुताय नमः ।
ॐ पञ्चापञ्चसुलोचनाय नमः ।

ॐ वर्णाश्रमगुरवे नमः ।
ॐ सर्ववर्णाधाराय नमः ।
ॐ प्रियङ्कराय नमः ।
ॐ कर्णिकारार्कदुत्तूरपूर्णपूजाफलप्रदाय नमः ।
ॐ योगीन्द्रहृदयानन्दाय नमः ।
ॐ योगिने नमः । (योगाय)
ॐ योगविदां वराय नमः ।
ॐ योगध्यानादिसन्तुष्टाय नमः । ६५०
ॐ रागादिरहिताय नमः ।
ॐ रमाय नमः ।
ॐ भवाम्भोधिप्लवाय नमः ।
ॐ बन्धमोचकाय नमः ।
ॐ भद्रदायकाय नमः ।
ॐ भक्तानुरक्ताय नमः ।
ॐ भव्याय नमः ।
ॐ सद्भक्तिदाय नमः ।
ॐ भक्तिभावनाय नमः ।
ॐ अनादिनिधनाय नमः । ६६०
ॐ अभीष्टाय नमः ।
ॐ भीमकान्ताय नमः ।
ॐ अर्जुनाय नमः ।
ॐ बलाय नमः ।
ॐ अनिरुद्धाय नमः ।
ॐ सत्यवादिने नमः ।
ॐ सदानन्दाश्रयाय नमः ।
ॐ अनघाय नमः ।
ॐ सर्वविद्यानामालयाय नमः । (सर्वविद्यालयाय)
ॐ सर्वकर्मणामाधाराय नमः । (सर्वकर्मधाराय) ६७०
ॐ सर्वलोकानामालोकाय नमः । (सर्वलोकालोकाय)
ॐ महात्मनामाविर्भावाय नमः ।
ॐ इज्यापूर्तेष्टफलदाय नमः ।
ॐ इच्छाशक्त्यादिसंश्रयाय नमः ।

ॐ इनाय नमः ।
ॐ सर्वामराराध्याय नमः ।
ॐ ईश्वराय नमः ।
ॐ जगदीश्वराय नमः ।
ॐ रुण्डपिङ्गलमध्यस्थाय नमः ।
ॐ रुद्राक्षाञ्चितकन्धराय नमः । (रुद्रश्रिये, नरवाचकाय) ६८०
ॐ
ॐ रुण्डिताधारभक्त्यादिरीडिताय नमः ।
ॐ सवनाशनाय नमः ।
ॐ उरुविक्रमबाहुल्याय नमः ।
ॐ उर्व्याधाराय नमः ।
ॐ धुरन्धराय नमः ।
ॐ उत्तरोत्तरकल्याणाय नमः ।
ॐ उत्तमोत्तमनायकाय नमः । (उत्तमाय उत्तमनायकाय)
ॐ ऊरुजानुतडिद्वृन्दाय नमः ।
ॐ ऊर्ध्वरेतसे नमः । ६९०
ॐ मनोहराय नमः ।
ॐ ऊहितानेकविभवाय नमः ।
ॐ ऊहिताम्नायमण्डलाय नमः ।
ॐ ऋषीश्वरस्तुतिप्रीताय नमः ।
ॐ ऋषिवाक्यप्रतिष्ठिताय नमः ।
ॐ ऋगादिनिगमाधाराय नमः ।
ॐ ऋजुकर्मणे नमः । (ऋजिचर्मणे)
ॐ मनोजवाय नमः । (मनऋजवे)
ॐ रूपादिविषयाधाराय नमः ।
ॐ रूपातीताय नमः । ७००
ॐ ऋषीश्वराय नमः ।
ॐ रूपलावण्यसम्युक्ताय नमः ।
ॐ रूपानन्दस्वरूपधृते नमः ।
ॐ लुलितानेकसङ्ग्रामाय नमः ।
ॐ लुप्यमानरिपुवज्राय नमः ।
ॐ लुप्तक्रूरान्धकहरायय नमः ।

ॐ ऌकाराञ्चितयन्त्रधृते नमः ।
ॐ ऌकारादिव्याधिहराय नमः ।
ॐ ऌस्वराञ्चितयन्त्रयुजे नमः । (ऌस्वराञ्चितयन्त्रयोजनाय)
ॐ ऌशादि गिरिशाय नमः । ७१०
ॐ पक्षाय नमः ।
ॐ खलवाचामगोचराय नमः ।
ॐ एष्यमाणाय नमः ।
ॐ नतजन एकच्चिताय नमः । (नतजनाय, एकच्चिताय)
ॐ दृढव्रताय नमः ।
ॐ एकाक्षरमहाबीजाय नमः ।
ॐ एकरुद्राय नमः ।
ॐ अद्वितीयकाय नमः ।
ॐ ऐश्वर्यवर्णनामाङ्काय नमः ।
ॐ ऐश्वर्यप्रकरोज्ज्वलाय नमः । ७२०
ॐ ऐरावणादि लक्ष्मीशाय नमः ।
ॐ ऐहिकामुष्मिकप्रदात्रे नमः ।
ॐ ओषधीशशिखारत्नाय नमः ।
ॐ ओङ्काराक्षरसम्युताय नमः ।
ॐ सकलदेवानामोकसे नमः । (सकलदिवौकसे)
ॐ ओजोराशये नमः ।
ॐ अजाद्यजाय नमः । (अजाड्यजाय)
ॐ औदार्यजीवनपराय नमः ।
ॐ औचित्यमणिजन्मभुवे नमः ।
ॐ उदासीनैकगिरिशाय नमः । (उदासीनाय, एकगिरिशाय) ७३०
ॐ उत्सवोत्सवकारणाय नमः । (उत्सवाय, उत्सवकारणाय)
ॐ अङ्गीकृतषडङ्गाङ्गाय नमः ।
ॐ अङ्गहारमहानटाय नमः ।
ॐ अङ्गजाङ्गजभस्माङ्गाय नमः ।
ॐ मङ्गलायतविग्रहाय नमः ।
ॐ कः किं त्वदनु देवेशाय नमः ।
ॐ कः किन्नु वरदप्रदाय नमः ।
ॐ कः किन्नु भक्तसन्तापहराय नमः ।

ॐ कारुण्यसागराय नमः ।
ॐ स्तोतुमिच्छूनां स्तोतव्याय नमः । ७४०
ॐ शरणार्थिनां मन्तव्याय नमः । (स्मरणार्तिनां मन्तव्याय)
ॐ ध्यानैकनिष्ठानां ध्येयाय नमः ।
ॐ धाम्नः परमपूरकाय नमः । (धाम्ने, परमपूरकय)
ॐ भगनेत्रहराय नमः ।
ॐ पूताय नमः ।
ॐ साधुदूषकभीषणाय नमः । (साधुदूषणभीषणाय नमः ।
ॐ भद्रकाळीमनोराजाय नमः ।
ॐ हंसाय नमः ।
ॐ सत्कर्मसारथये नमः ।
ॐ सभ्याय नमः । ७५०
ॐ साधवे नमः ।
ॐ सभारत्नाय नमः ।
ॐ सौन्दर्यगिरिशेखराय नमः ।
ॐ सुकुमाराय नमः ।
ॐ सौख्यकराय नमः ।
ॐ सहिष्णवे नमः ।
ॐ साध्यसाधनाय नमः ।
ॐ निर्मत्सराय नमः ।
ॐ निष्प्रपञ्चाय नमः ।
ॐ निर्लोभाय नमः । ७६०
ॐ निर्गुणाय नमः ।
ॐ नयाय नमः ।
ॐ वीताभिमानाय नमः । (निरभिमानाय)
ॐ निर्जाताय नमः ।
ॐ निरातङ्काय नमः ।
ॐ निरञ्जनाय नमः ।
ॐ कालत्रयाय नमः ।
ॐ कलिहराय नमः ।
ॐ नेत्रत्रयविराजिताय नमः ।
ॐ अग्नित्रयनिभाङ्गाय नमः । ७७०

ॐ भस्मीकृतपुरत्रयाय नमः ।
ॐ कृतकार्याय नमः ।
ॐ व्रतधराय नमः ।
ॐ व्रतनाशाय नमः ।
ॐ प्रतापवते नमः ।
ॐ निरस्तदुर्विधये नमः ।
ॐ निर्गताशाय नमः ।
ॐ निर्वाणनीरधये नमः ।
ॐ सर्वहेतूनां निदानाय नमः ।
ॐ निश्चितार्थेश्वरेश्वराय नमः । ७८०
ॐ अद्वैतशाम्भवमहसे नमः । (अद्वैतशाम्भवमहत्तेजसे)
ॐ सनिर्व्याजाय नमः । (अनिर्व्याजाय)
ॐ ऊर्ध्वलोचनाय नमः ।
ॐ अपूर्वपूर्वाय नमः ।
ॐ परमाय नमः । (यस्मै)
ॐ सपूर्वाय नमः । (पूर्वस्मै)
ॐ पूर्वपूर्वदिशे नमः ।
ॐ अतीन्द्रियाय नमः ।
ॐ सत्यनिधये नमः ।
ॐ अखण्डानन्दविग्रहाय नमः । ७९०
ॐ आदिदेवाय नमः ।
ॐ प्रसन्नात्मने नमः ।
ॐ आराधकजनेष्टदाय नमः । (आराधितजनेष्टदाय)
ॐ सर्वदेवमयाय नमः ।
ॐ सर्वस्मै नमः ।
ॐ जगद्व्यासाय नमः । (जगद्वाससे)
ॐ सुलक्षणाय नमः ।
ॐ सर्वान्तरात्मने नमः ।
ॐ सदृशाय नमः ।
ॐ सर्वलोकैकपूजिताय नमः । ८००
ॐ पुराणपुरुषाय नमः ।
ॐ पुण्याय नमः ।

ॐ पुण्यश्लोकाय नमः ।
ॐ सुधामयाय नमः ।
ॐ पूर्वापरज्ञाय नमः ।
ॐ पुरंजिते नमः ।
ॐ पूर्वदेवामरार्चिताय नमः ।
ॐ प्रसन्नदर्शितमुखाय नमः ।
ॐ पन्नगावळिभूषणाय नमः ।
ॐ प्रसिद्धाय नमः । ८१०
ॐ प्रणताधाराय नमः ।
ॐ प्रलयोद्भूतकारणाय नमः ।
ॐ ज्योतिर्मयाय नमः ।
ॐ ज्वलद्दंष्ट्राय नमः ।
ॐ ज्योतिर्मालावळीवृताय नमः ।
ॐ जाज्वल्यमानाय नमः ।
ॐ ज्वलननेत्राय नमः ।
ॐ जलधरद्युतये नमः ।
ॐ कृपाम्भोराशये नमः ।
ॐ अम्लानाय नमः । ८२०
ॐ वाक्यपुष्टाय नमः ।
ॐ अपराजिताय नमः ।
ॐ क्षपाकराय नमः ।
ॐ अर्ककोटिप्रभाकराय नमः ।
ॐ करुणाकराय नमः ।
ॐ एकमूर्तये नमः ।
ॐ त्रिधामूर्तये नमः ।
ॐ दिव्यमूर्तये नमः ।
ॐ अनाकुलाय नमः । नमः । (दीनानुकूलाय)
ॐ अनन्तमूर्तये नमः । ८३०
ॐ अक्षोभ्याय नमः ।
ॐ कृपामूर्तये नमः ।
ॐ सुकीर्तिधृते नमः ।
ॐ अकल्पितामरतरवे नमः ।

ॐ अकामितसुकामदुहे नमः ।
ॐ अचिन्तितमहाचिन्तामणये नमः ।
ॐ देवशिखामणये नमः ।
ॐ अतीन्द्रियाय नमः ।
ॐ अजिताय नमः । (ऊर्जिताय)
ॐ प्रांशवे नमः । ८४०
ॐ ब्रह्मविष्ण्वादिवन्दिताय नमः ।
ॐ हंसाय नमः ।
ॐ मरीचये नमः ।
ॐ भीमाय नमः ।
ॐ रत्नसानुशरासनाय नमः ।
ॐ सम्भवाय नमः ।
ॐ अतीन्द्रियाय नमः ।
ॐ वैद्याय नमः । (वैन्याय)
ॐ विश्वरूपिणे नमः ।
ॐ निरञ्जनाय नमः । ८५०
ॐ वसुदाय नमः ।
ॐ सुभुजाय नमः ।
ॐ नैकमायाय नमः ।
ॐ अव्ययाय नमः । (भव्याय)
ॐ प्रमादनाय नमः ।
ॐ अगदाय नमः ।
ॐ रोगहर्त्रे नमः ।
ॐ शरासनविशारदाय नमः ।
ॐ मायाविश्वादनाय नमः । (मायिने, विश्वादनाय)
ॐ व्यापिने नमः । ८६०
ॐ पिनाककरसम्भवाय नमः ।
ॐ मनोवेगाय नमः ।
ॐ मनोरुपिणे नमः ।
ॐ पूर्णाय नमः ।
ॐ पुरुषपुङ्गवाय नमः ।
ॐ शब्दादिगाय नमः ।

ॐ गभीरात्मने नमः ।
ॐ कोमलाङ्गाय नमः ।
ॐ प्रजागराय नमः ।
ॐ त्रिकालज्ञाय नमः । ८७०
ॐ मुनये नमः ।
ॐ साक्षिणे नमः ।
ॐ पापारये नमः ।
ॐ सेवकप्रियाय नमः ।
ॐ उत्तमाय नमः ।
ॐ सात्त्विकाय नमः ।
ॐ सत्याय नमः ।
ॐ सत्यसन्धाय नमः ।
ॐ निराकुलाय नमः ।
ॐ रसाय नमः । ८८०
ॐ रसज्ञाय नमः ।
ॐ सारज्ञाय नमः ।
ॐ लोकसाराय नमः ।
ॐ रसात्मकाय नमः ।
ॐ पूषादन्तभिदे नमः ।
ॐ अव्यग्राय नमः ।
ॐ दक्षयज्ञनिषूदनाय नमः ।
ॐ देवाग्रण्ये नमः ।
ॐ शिवध्यानतत्पराय नमः ।
ॐ परमाय नमः । ८९०
ॐ शुभाय नमः ।
ॐ जयाय नमः ।
ॐ जयादये नमः । (जरारये)
ॐ सर्वाघशमनाय नमः ।
ॐ भवभञ्जनाय नमः ।
ॐ अलङ्करिष्णवे नमः ।
ॐ अचलाय नमः ।
ॐ रोचिष्णवे नमः ।

ॐ विक्रमोत्तमाय नमः ।
ॐ शब्दगाय नमः । ९००
ॐ प्रणवाय नमः ।
ॐ वायवे नमः । (मायिने)
ॐ अंशुमते नमः ।
ॐ अनलतापहृते नमः ।
ॐ निरीशाय नमः ।
ॐ निर्विकल्पाय नमः ।
ॐ चिद्रूपाय नमः ।
ॐ जितसाध्वसाय नमः ।
ॐ उत्तारणाय नमः ।
ॐ दुष्कृतिघ्ने नमः । ९१०
ॐ दुर्धर्षाय नमः ।
ॐ दुस्सहाय नमः ।
ॐ अभयाय नमः ।
ॐ नक्षत्रमालिने नमः ।
ॐ नाकेशाय नमः ।
ॐ स्वाधिष्ठानषडाश्रयाय नमः ।
ॐ अकायाय नमः ।
ॐ भक्तकायस्थाय नमः ।
ॐ कालज्ञानिने नमः ।
ॐ महानटाय नमः । ९२०
ॐ अंशवे नमः ।
ॐ शब्दपतये नमः ।
ॐ योगिने नमः ।
ॐ पवनाय नमः ।
ॐ शिखिसारथये नमः ।
ॐ वसन्ताय नमः ।
ॐ माधवाय नमः ।
ॐ ग्रीष्माय नमः ।
ॐ पवनाय नमः ।
ॐ पावनाय नमः । ९३०

ॐ अमलाय नमः । (अनलाय)
ॐ वारवे नमः ।
ॐ विशल्यचतुराय नमः ।
ॐ शिवचत्वरसंस्थिताय नमः ।
ॐ आत्मयोगाय नमः ।
ॐ समाम्नायतीर्थदेहाय नमः ।
ॐ शिवालयाय नमः ।
ॐ मुण्डाय नमः ।
ॐ विरूपाय नमः ।
ॐ विकृतये नमः । ९४०
ॐ दण्डाय नमः ।
ॐ दान्ताय नमः ।
ॐ गुणोत्तमाय नमः ।
ॐ देवासुरगुरवे नमः ।
ॐ देवाय नमः ।
ॐ देवासुरनमस्कृताय नमः ।
ॐ देवासुरमहामन्त्राय नमः ।
ॐ देवासुरमहाश्रयाय नमः ।
ॐ दिव्याय नमः ।
ॐ अचिन्त्याय नमः । ९५०
ॐ देवताऽऽत्मने नमः ।
ॐ ईशाय नमः ।
ॐ अनीशाय नमः ।
ॐ नगाग्रगाय नमः ।
ॐ नन्दीश्वराय नमः ।
ॐ नन्दिसख्ये नमः ।
ॐ नन्दिस्तुतपराक्रमाय नमः ।
ॐ नग्नाय नमः ।
ॐ नगव्रतधराय नमः ।
ॐ प्रलयाकाररूपधृते नमः । - प्रलयकालरूपदृशे नमः । ९६०
ॐ सेश्वराय नमः । - स्वेशाय
ॐ स्वर्गदाय नमः ।

ॐ स्वर्गगाय नमः ।
ॐ स्वराय नमः ।
ॐ सर्वमयाय नमः ।
ॐ स्वनाय नमः ।
ॐ बीजाक्षराय नमः ।
ॐ बीजाध्यक्षाय नमः ।
ॐ बीजकर्त्रे नमः ।
ॐ धर्मकृते नमः । ९७०
ॐ धर्मवर्धनाय नमः ।
ॐ दक्षयज्ञमहाद्वेषिणे नमः ।
ॐ विष्णुकन्धरपातनाय नमः ।
ॐ धूर्जटये नमः ।
ॐ खण्डपरशवे नमः ।
ॐ सकलाय नमः ।
ॐ निष्कलाय नमः ।
ॐ असमाय नमः । - अनघाय नमः ।
ॐ मृडाय नमः ।
ॐ नटाय नमः । ९८०
ॐ पूरयित्रे नमः ।
ॐ पुण्यक्रूराय नमः ।
ॐ मनोजवाय नमः ।
ॐ सद्भूताय नमः ।
ॐ सत्कृताय नमः ।
ॐ शान्ताय नमः ।
ॐ कालकूटाय नमः ।
ॐ महते नमः ।
ॐ अनघाय नमः ।
ॐ अर्थाय नमः । ९९०
ॐ अनर्थाय नमः ।
ॐ महाकायाय नमः ।
ॐ नैककर्मसमञ्जसाय नमः ।
ॐ भूशयाय नमः ।

ॐ भूषणाय नमः ।

ॐ भूतये नमः ।

ॐ भूषणाय नमः ।

ॐ भूतवाहनाय नमः ।

ॐ शिखण्डिने नमः ।

ॐ कवचिने नमः । १०००

ॐ शूलिने नमः ।

ॐ जटिने नमः ।

ॐ मुण्डिने नमः ।

ॐ कुण्डलिने नमः ।

ॐ मेखलिने नमः ।

ॐ मुसलिने नमः ।

ॐ खड्गिने नमः ।

ॐ कङ्कणीकृतवासुकये नमः । १००८

इति श्रीवीरभद्रसहस्रनामावलिः समाप्ता ।

Stotra encoded by Sivakumar Thyagarajan shivakumar24 at gmail.com
Proofread by lalitha parameswari parameswari.lalitha at gmail.com,
Shri Pisipati Anjaneyulu, PSA Easwaran psaeaswaran at gmail.com

*Shri Virabhadra Sahasra Namavali 1000 names*
pdf was typeset on January 8, 2019

Please send corrections to *sanskrit@cheerful.com*

